# श्रीहनुमत्स्वरमालास्तोत्रम्

अञ्जनागर्भसम्भूतं अग्निमित्रस्य पुत्रकम् ।
नमामि रामदूतं तं सर्वकार्यार्थसिद्धये ॥ १॥

आदित्यसदृशं बालं अरुणोदयसम्भवम् ।
नमामि रामदूतं तं सर्वकार्यार्थसिद्धये ॥ २॥

इङ्गितज्ञस्य रामस्य दूतकार्यपरायणम् ।
नमामि रामदूतं तं सर्वकार्यार्थसिद्धये ॥ ३॥

ईश्वरस्यांशसम्भूतं ईषणारहितं हरिम् ।
नमामि रामदूतं तं सर्वकार्यार्थसिद्धये ॥ ४॥

उदधिक्रमणं वीरं उदारचरितं विभुम् ।
नमामि रामदूतं तं सर्वकार्यार्थसिद्धये ॥ ५॥

ऊरुवेगोत्थिता वृक्षा मुहूर्तं कपिमन्वयुः ।
नमामि रामदूतं तं सर्वकार्यार्थसिद्धये ॥ ६॥

ऋक्शाखाध्यायिनं शान्तं मृग्यमाणपदार्चितम् ।
नमामि रामदूतं तं सर्वकार्यार्थसिद्धये ॥ ७॥

ॠकाराद्यक्षरोत्पत्ति ज्ञानपूरितमानसम् ।
नमामि रामदूतं तं सर्वकार्यार्थसिद्धये ॥ ८॥

ऋऌ इत्यादिवर्णानां उच्चारणविधायकम् । ऌॡ
नमामि रामदूतं तं सर्वकार्यार्थसिद्धये ॥ ९॥

एधमानशरीरं तं राजमानमुखाकृतिम् ।
नमामि रामदूतं तं सर्वकार्यार्थसिद्धये ॥ १०॥

ऐक्ष्वाकुकुलवीरस्य रामस्य प्रियपात्रकम् ।
नमामि रामदूतं तं सर्वकार्यार्थसिद्धये ॥ ११॥

ओषधाद्रिसमानीतदिव्यौषधिसमन्वितम् ।
नमामि रामदूतं तं सर्वकार्यार्थसिद्धये ॥ १२॥

औत्सुक्यमात्रकालेन शत्रुक्षयकरं विभुम् ।
नमामि रामदूतं तं सर्वकार्यार्थसिद्धये ॥ १३॥

इति श्रीहनुमत्स्वरमालास्तोत्रं सम्पूर्णम् ।